।। शिवाभ्यां नमः ।।

# ।। कुळीराष्टकम् ।।

तवास्याराद्धारः कति मुनिवराः कत्यपि सुराः
तपस्या सन्नाहैः सुचिरममनोवाक्पथचरैः।
अमीषां केषामप्यसुलभममुष्मै पदमदाः
कुळीरायोदारं शिव तव दया सा बलवती।। १
अकर्तुं कर्तुं वा भुवनमखिलं ये किल भव-
न्त्यलं तेपादान्ते पुरहर वलन्ते तव सुराः।
कुटीरं कोटीरे त्वमहह कुळीराय कृतवान्
भवान् विश्वस्येष्टे तव पुनरधीष्टे हि करुणा।। २
तवारूढो मौळिं तदनधिगमव्रीळनमितां
चतुर्वक्त्रीं यस्त्वच्चरणसविधे पश्यति विधेः।
कुळीरस्यास्यायं कुलिशभृदलक्ष्यश्शिवभव-
द्दया सेयं त्वामप्यधरितवती किन्न कुरुताम्।। ३
श्रुतिस्मृत्यभ्यासो नयनिचयभूयः परिचयः
तथा तत्तत्कर्मव्यसनमपि शुष्कश्रमकृते।
त्वयि स्वान्तं लग्नं न यदि यदि लग्नं तदियता
जिता कैवल्यश्रीः पुरहर कुळीरोऽत्र गमकः।। ४
तपोभिः प्राग्जन्मप्रकरपरिनम्रैः पुररिपो
तनौ यस्यां कस्यामपि सहि भवार्तिप्रतिभटः।
त्वयि स्याद्धीबन्धस्तनुरचरमा सैव चरमा
कुळीरो ब्रूते तन्महिमपथविद्वद्गुरुनयम्।। ५
धियो धानं नाम त्वयि शिव चिदानन्द परमो-
न्मिषत्साम्राज्यश्रीकुरळरभसाकर्षकुतुकम्।
कुळीरेण ज्ञातं कथमनधिगम्यं दिविषदां
दया ते स्वच्छन्दा प्रथयति न कस्मै किमथवा।। ६
तदुच्चत्वं नैच्यं त्वितरदिति लोकाश्शिव मुधा
व्यवस्थामस्थाने विदधति च नन्दन्ति च मिथः।

कुळीरस्त्वन्मौळिस्थितिमसुलभामेत्य स भवत्-
कृपामुच्चत्वं तद्विरहमपि नैच्यं प्रथयति।। ७
कुळीरेशाख्यातिर्गिरिशकृपयोच्चैरुपहृता
तवेयं भक्तायोन्नतिवितरण श्रीगमनिका।
भवद्भक्त्युन्मीलत्फलगरिमटीकास्थितिजुषा
कुळीरस्य ख्यात्या जगति सहचर्या विहरते।। ८
कुळीरेशस्तोत्रं त्वदनुपधिकानुग्रहभवं
पठेयुर्ये नित्यं शृणुयुरपि वा ये पुनरिदम्।
प्रसादात्ते तेऽमी विधुत दुरितास्त्वय्यभिरताः
भवेयुर्निर्यत्नाधिगतसकलाभीप्सितफलाः।। ९
कर्कटकचन्द्रयोगः कर्कटकेशान मूर्ध्नि ते दृष्टः।
कारय वृष्टिममोघां वारय वर्षोपरोधदुर्योगम्।। १०

।। इति श्री श्रीधरवेङ्कटेशार्य विरचितं कुळीराष्टकं सम्पूर्णम् ।।